ज्ञानिनाम्॥ १५ ॥ रमलरहस्यं संप्रोक्तं ग्रंथसारं कृतं ध्रुवम् । लाभालाभौ सुखं दुःखं जयं चैव पराजयम् ॥ १६ ॥ जीवनं मरणं गुह्यं मनोऽभिलषितं तथा ॥ वृत्तांतं सर्वजंतूनां येन जानाति साधकः ॥ १७ ॥ उक्तं च । ब्रह्मद्वेपितुरुष्कसंभवमिदं तार्तीयकं वर्त्तते । शास्त्रं यद्यपि सद्द्विजैरपि तथाप्यध्येतुमर्हं भवेत्।यस्माद्यत्सदसत्फलन्निगदितं सत्यं हि किं पंकजे॥शंकापंकभवो भवेत्फणिफणोत्पन्ने मणौ दूषणम्॥१८॥धात्राशास्त्रमकारि यत्कृतयुगे तन्नान्यथा सर्वथा त्रेतायामपि बादरायणकृतं तन्नानृतं नो भवेत् । यद्गर्गेण विनिर्मितं कृतिचमत्काराय च द्वापरे कालेच प्रबले कलौ त्वविकलं तार्त्तीयकोक्तं फलम् ॥ १९ ॥ अतः सत्यं पुनः सत्यं पुनः सत्यं तथैव च । नान्यथा विद्धि देवज्ञयवनाचार्यभाषितम् ॥ २० ॥ लोभतो नैव दातव्यो न दातव्यो भयैरपि ॥ रमलरहस्यग्रंथो गोपनीयः प्रयत्नतः ॥ २१ ॥ दुराचाररयुते पुंसि दुष्टे क्षुद्रे गुरुद्विषि ॥ दुर्जने सत्यहीने च नैतच्छास्त्रं प्रकाशयेत् ॥२२॥ नैतद्देयं कृतघ्नाय वंचकाय न कौतुके । शिष्याय भक्तियुक्ताय साधकाय प्रदापयेत् ॥२३॥ सुपरीक्ष्य हितं मित्रं चिरकालमुपागतम् । तस्मै निवेदयेच्छास्त्रं यतो धर्मो विवर्धते ॥२४॥ शांताय शुद्धचित्ताय सत्यधर्मरताय च । यशस्विने कृतज्ञाय चैतच्छास्त्रं प्रकाशयेत् ॥२५॥ भारद्वाजकुलोद्भवो हि मतिमान्ख्यातः सदा कीर्त्तिमाञ्छिष्याचारयुतः पुरंदरसुतो यः सद्द्विजो भक्तिमान् । शैवे मंत्रविधौ सदा शिवसुधीर्भीमज्जनो नम्रधीः सूनुस्तस्य महद्विलासगणिते शास्त्रे कृतातिश्रमः ॥ २६ ॥ प्रणमामिगुरोरंघ्रिकंजभ्रमररूपभृत् । परागगंधानुरक्तो द्विजानां भक्तितत्परः ॥ २७ ॥ शममर्दनधातोश्च ह्युक्तं पूर्वं मयेति हि । ल्युट्प्रत्यये त्वनादेशे शर्म्मणा रचितं त्विदम्॥२८॥उदितो ह्याद्यवर्णो यो द्वितीयःचोष्मणां तथा । क्रमेण ऋणसंयुक्तः सदा चाद्यः प्रशस्यताम्॥ २९ ॥ यत्कुत्रापि परिश्रमो यदि भवेत्पद्येविशाले त्वहो शब्दे वापिमनोविकारवशतस्तच्छोध्यतां सादरात्। ये शिष्टा हि परोपकारनिरताः स्वात्मावबोधास्तथा विज्ञप्तिर्मम सावधानमनसा तेषां तु पांडित्यके ॥ ३० ॥

इति श्रीभयभञ्जनशर्मकृते रमलरहस्ये सारसंग्रहे मिश्रितप्रकरणं समाप्तम् । समाप्तश्चायं ग्रन्थः ॥